काम–अरे! विस्तरेण कथय भोजनसंविधानम् ।

शाता:—शृणु रे शृणु!

सूपं घृतं पायसं च-माषा-
पूपं गुलापूपमाज्येन क्लृप्तम् ।
पोली पयः पूरमग्ना-शाक-
पालीकृतंकिञ्चिदज्ञातपूर्वम् ॥७२॥
गोधूमक्लृप्ता च हल्वा-एला
साधूक्षिता मोदका लड्डुकानि ।
सा शष्कुली चालनीव-हन्त
काश्चप्रभा पप्पटी बुद्बुदाढ्या ॥७३॥

ता एव तास्तानि तानि ।

कामः—भाग्यवानसि !

शाता:–नैतावन्मात्रं । सर्वाण्येतानि तयेव महाराजकुमारिकया कनककङ्कणकलकलिताभ्यां कराभ्यां परिवेषितानि ।

कामः–अहो पाटच्चर । कथमिमं विस्मृत्य गतोऽसि?

शाता:–न हि विस्मृतो भवान् प्रियसखः । भोजनसमयेऽपि त्वामेवाहं चिन्तयन्नस्मरमलंकथनमपि ।

काम-भवतु। कथय तावदिदानीं कुत्र वा गत्वा ममोदरं पूरयेयम्।

शाता–गच्छ तामेव सरोजिनीं राजसुताया वयस्याम् ।

काम–कथमेषा वराकी स्वोदरपूरणैकपरा मां भोजयिष्यति दास्याः पुत्री ।

शता–सैषा सरोजिनी शृण्वन्ती समायाति ।

काम–[सभयं] नष्टावावाम् । एहि पलायावहे ।

[ततः प्रविशति सरोजिनी कुसुमकुङ्कुमहस्ता] ।

सरोजिनी–अज्ञप्ताऽसि देव्या दयावत्या अविज्ञातकारणं कृशीभवति ते सखी चन्द्रलेखा । तस्या भक्तिकोदयायाऽद्य पूर्णिमायां सीमन्तटस्थां कुलदेवतां भवानीं सम्यगाराध्य प्राप्तप्रसादां कुरु तामिति । तद्भगवतीप्रसादमिमं तस्यै नेष्यामि । [इति परिक्रामति] ।

[ततः प्रविशति मदनलतिका] ।

मदनलतिका–सरोजिनी !

सरो–अयि ! सख्याः सकाशादागतां त्वां मन्ये । अपि निर्वृता चन्द्रलेखा ।

मदन–कथं ? प्रसक्तिरपि निर्वृतेः ! पूर्वं विरहपीडिताया अद्यतनसंभवेनातिशङ्काकलुषितं चेतः ।

सरो–कुतोऽतिशङ्का ।

मदन–अद्य किल महाराजो व्रतसमापनमुद्दिश्य भोजयामास विपश्चिद्वर्गम् ।

सरो–मन्ये हेमचन्द्रोऽपि समानीत इति ।

मदन–अथ किम्?। तदा किल पण्डितेषु बहुमानेन चन्द्र लेखामेव परिवेषयितुं नियोजयति स महाराजः।

सरो–सत्यं नियतिचोदितोऽयं सन्दर्भो हेमचन्द्रपुनर्दर्शनेनात्मनः सफलीकरणाय वयस्यायाः।

मदन–तेनैव किल महदत्याहितं संवृत्तम्।

सरो–[सोद्वेगं] कथमिव?।

मदन–मध्यत आसीनं राजानं परिवार्य कृतभोजने पण्डितमण्डले, परिवेषणाय चन्द्रलेखा भक्ष्यहस्ता मन्दमुदगादन्तर्गृहात्।

सरो–किमीक्षिता सानुरागं हेमचन्द्रेण?।

मदन–न समीक्षणमात्रतस्तुष्टः। वर्णयितुमपि प्रवृत्तः।

सरो–कम्पते हृदयम्। कथं वर्णितं वयस्येन।

मदनः–क्षौमं वासः शशधरकलापाण्डरं धारयन्ती
काञ्चीदाम्ना प्रकरमणिकेनोहनीयावलग्ना।
स्मेरास्यश्रीविदलितनवश्वेतपङ्केरुहाभा
.... .... .... .... ॥७४॥

सरोः–यथार्थं वर्णितं हेमचन्द्रेण।

देशकालावनालोच्य विषये समुपस्थिते।
मनःकपाटमुद्घाट्य प्रेम निष्क्रामति क्षणात्॥७५॥

किं कृतं तदा महाराजेन?

**मदनः**–सरोषं स्फुरिताधरं च समीक्ष्य .... ।

**सरोः**–कच्चिच्छिक्षितमपि ?

**मदनः**–स किल दण्डयितुमेव समुद्युक्तः ।

ततस्तु परिज्ञाततत्वेन पित्रा कलाधरेण क्षणात्तुरीयः पादोऽन्यथाऽऽपूरितः ।

**सरोः**–आशुकवी किल जनकतनयौ । कथमापूरितम् ?

**मदनः**–'विद्यादेवी कलयतु शिवं मङ्गलानां विधात्री' ॥ इति ।

**सरोः**–अहो! समयकौशलं कलाधरस्य ।

अन्त्यपादपूरणं किं तथ्यममन्यत महाराजः ?

**मदनः**–स किल शङ्कमानो दुर्मतिं साकूतमवैक्षत । आकांक्षमाणोऽपि तस्य दण्डविधानं वाणीस्तुतिरित्यपह्नुततया नापारयत्पण्डितसविधे शिक्षितुं, नापि दुर्वक्तुम् ।

**सरोः**–किमित एव तयाऽतिशङ्कितम् ?

भवतु कुत्राद्य प्रियसखी ?

**मदनः**–अद्य किल चन्द्रलेखा "परिवेषणश्रमेण खिन्नचरणेति" सुखमारुतं विविक्तं सरोवरोद्यानं आसेवितुमुद्यता । अहमपि तत्पार्श्ववर्तिनी भवितुमाज्ञप्ता । त्वमपि प्रियसख्याः क्लेशितायाः आरोग्यकृते भगवतीमाराधयितुं नियोजितेति देव्या भणितम् । मन्ये तदेतन्निर्वर्त्य निवृत्तेति ।

**सरो**–अथ किम् ।

**मदन**–भवतु । नालमिदमिदानीन्तनमस्या उद्वेगमुपशमयितुम्
गच्छ, तमेव हेमचन्द्रं गूढपथेन समानय तत्सरसीतटो
द्यानम् ।

**सरो**–किमिदमपि साध्यं नाम ।

**मदन**–शङ्कितो वा महाराजः । तस्य प्रतारणायैव चरणरुजः
प्रतीकारव्याजेन तद्दूरस्थमेकान्तं निष्कुटं गन्तुमुद्युक्ता
प्रियसखी । कोवाऽन्यस्तत्र समागमिष्यति ।

**सरो**–उचित एवायं तटः । आनयामि त्वरिता हेमचन्द्रम् ।
पूर्वं सङ्गत्य प्रियसखीमुपनय भवानीप्रसादमिमम् ।
[इति ददाति] ।

**मदन**–तथा । [निष्क्रान्ते] ।

[॥ विष्कम्भः ॥]

---

ततः प्रविशति दुर्मतिः ।

**दुर्मतिः**–शस्त्रे च शास्त्रनिचये चिरसङ्क्रमेन
लब्धा मतिः किमिह मे वितथैव सर्वा ।
यन्नूतनेन विजितः स्तुतिजीविकेन
तस्याः पुरो वसुमतीपतिकन्यकायाः ॥७६॥

[सरोषं] रे मगधापशद! मावह वृथा गर्वं राजदारिका-
मानसहर इति, अथवा "सांयुगीनस्य सेनापतेरपि मे विजेतेति ।

तदा किल सख्यासञ्जीवितो जनकेन कलाधरेण, अथवा दैवेन। अधिगच्छ मम मुष्टिगतप्राणमात्मानम्" । समक्षमेव पश्यतः ते मन्मनोहारिणीं चन्द्रलेखां वशीकृत्य तत्सन्निध एव यदि नोत्प्राणयामि त्वां नाहं दुर्मतिर्न वा सेनापतिः। [सचिन्तं] कुत्र वाऽहं प्रस्थितः? [सस्मरणं] आं! वशीकरणाय चन्द्रलेखायाः नियोजितया हेमलतया विभ्रमाय रम्यसरोवरोद्यानं प्रस्थितां चन्द्रलेखामनुगन्तुमादिष्टः । [परितः पश्यन्] किमहमनवगत-गतिश्चिन्ताकुलतया स्वयमेव तदुद्यानमागतः । अहो रमणीये-यमुपवनतटी ।

स्मेरास्या कुन्दकुसुमैः फुल्लगुच्छोद्गमस्तनी ।
आलपन्ती पिकारावैश्चन्द्रलेखेव राजते ॥७६॥

अनागतेव प्रतिभाति चन्द्रलेखा । [सदृष्टिक्षेपं] इतो दूरान्मदनलतिकाकरमवलम्बमाना समागच्छति चन्द्रलेखा । अहो लावण्यातिशयोऽस्याः ।

अङ्गेन हाटकलताविभवावधीरि-
भासाऽद्य माधववधूमयमोहनाङ्गम् ।
धिक्कर्तुमेव वसुधामसुधाभिलाभात्
रुष्टेन दैत्यगुरुणा किमियन्तु नीता ॥७८॥

अयमेव समयः सखीमात्रसहायतया तामालपितुम् । तदात्मानमुपस्थापयन्नभिलषितं संपादयामि । [सचिन्तं] अथवा यावदपारयदस्या हृदयपरिवर्तिने हेमलतेत्यविज्ञाय न युक्तं

प्रत्यक्षतो गन्तुम् । तद्गुल्मान्तरितो भूत्वा शृणोमि तावद्विस्रंभ-जल्पितमनयोः । [इति पादपान्तरितस्तिष्ठति ।]

[ ततः प्रविशतश्चन्द्रलेखा मदनलतिके । ]

चन्द्रलेखा—सखि ! मदनलतिके ! व्याकुलितचेतना न पारयामि कर्तव्ये । तदप्रमत्ता नय माम् ।

मदन—पेशलतया शरीरस्य म्लायसि परं मृणालमिव । अयं पुन्नागतरुमूले स्फाटिकः प्रस्तरः । उपविश्यताम् ॥

चन्द्र—[सायासमुपविशति] ।

दुर्म—[स्वगतं] किमस्याः कलुषताया निदानम् ।

मदन—माऽऽत्मानमायासय । धीरा भव ।

चन्द्र—न संभवति ममाश्वासस्तं विजित्वरमेव चिन्तयन्त्याः ।

दुर्म—[स्वगतं] कोऽयं वी..? किन्त्वहम् ।

मदन—न हि स दुरधिगमः । विस्रब्धा भव ।

चन्द्र—सीदामि पुनः पितुश्छन्दमालोच्य ।

दुर्म—[स्वगतं] मन्ये हृदयचोरोऽस्या अहमेव । पाञ्चालभूपतेः कुमाराय प्रदातुमात्मानमुद्युङ्क्ते इत्यस्या वैमनस्यम् ।

मदन—कथमाचरिष्यति सुताप्राणो महाराज एकतनया-यास्तवाशयविरुद्धम् ।

चन्द्र—न विश्वसिति हृदयं मुधाऽवष्टम्भकं तातम् ।

मदन—देव्या समुद्योजितः करिष्यत्येव ते प्रियम् ।

दुर्म—[स्वगतम्] नास्फुरदिदं मम मूढस्य ? यद्देवी दयावती प्रथममनुकूलयितव्येति ।

चन्द्र—तपस्विनी सा व्यवसायिनि राजनि कथं प्रभविष्यति ? ।

मदनः—निर्वृता भव । सर्वं सर्वमङ्गला संविधास्यति ।

चन्द्रः—किं तथ्यमेव त्वदुक्तं, यदत्र स समागमिष्यतीति ?

मदनः—न हि मयोक्तममत्यम् ।

दुर्मः—[सोत्साहं स्वगतं] हेमलते ! सुविहितं त्वया चतुरया । यदत्र समागमिष्यामीति पूर्वमेवोक्त्वा प्रस्थापिता चन्द्रलेखा ।

चन्द्रः—स सन्निधास्यतीति परितुष्यति भृशं मम मानसम् ।

मदनः—युक्तमेव । तत्सन्दर्शने विस्मरिष्यसि सख्यावप्यावाम् ।

दुर्मः—[स्वगतं] किमर्थं मया मुधा विलम्ब्यते वर्धयताऽस्याः कौतुकम् । [इति पुरः परिक्रामन्] किमेतद्दूरे [निर्वर्ण्य, सकौतुकं] सरोजिनी किल समायाति । [साशङ्कं] कोऽसावस्याः पृष्ठतः ? कथं हेमचन्द्रः ? सरोजिनीमुखेन किमयं चन्द्रलेखां वशीकर्तुं विविक्तमिदमायाति निष्कुटम् । [सरोषं] आः पापाधम ! मागधवृत्त्या राजानमाश्रित्य किं तद्दारिकामप्यनुकूलयसि ? नेयं समीहते मां द्रष्टुमपि त्वयि जीवति । दिष्ट्या त्वमद्य निष्प्रहरणः । कृपाणपाणिरहं यमसदनं प्रेषये त्वाम् । [इति निष्क्रान्तः ।]

चन्द्र—कथं वां विस्मरिष्यामि ।

रत्नाकरं पतिं प्राप्याप्यमराणां तरंगिणी ।
कथं स्थितिं लभेतात्र तटीभ्यां यदि वर्जिता ॥७९॥

मदन—सखि प्रीणयसि भृशं सौहृदेन । अपि तमासाद्य पतिं प्रमुदितां त्वां पश्यन्ती कृतकृत्या भवेयम् ।

चन्द्र—[सबहुमानं] मन्ये नियतिकृपयैव लब्धमिदं सखीयुगलम् । [सवैक्लव्यं] कथं विलम्ब्यते सरोजिन्या? कच्चिन्न संदृष्टः? अथवाऽलब्धसमागमावसरः क्लिश्नाति? उत संरुद्धगतिः सेवकवर्गैः ।

मदन—भवतु । यद्वा तद्वा सर्वानपि विलोभ्य नूनमानेष्यति सरोजिनी ।

चन्द्र—तथैव मन्ये मम हृदयतोषातिरेकात् ।

[ ततः प्रविशति सरोजिनीमनुगतो हेमचन्द्रः । ]

मदन—अहो! प्रियवयस्यः ।

चन्द्र—[सहर्षं उत्तिष्ठन्ती स्वगतं] कथमयं परिश्रान्त इव ।

मदन—किमनन्तरायमागमनम् ।

हेम—अथ किम् ।

सरो—अद्य किल प्रियसखीमभिप्रस्थितो वयस्योऽन्तरा कयाऽपि यदृच्छयाऽऽगतया दृढमालिङ्गितः । तत एव च विलम्बितागमनः ।

चन्द्र—[स्वगतं सासूयं] केयमन्तरायिता स्वयङ्कृतालिङ्गना च।

मदन—का वा सा बहुमता? वयस्यस्य।

सरो—प्रिय मित्र! किं वक्तुमनुमन्यते भवान्।

हेम—किमर्थं तदत्र प्रकटयितव्यम्।

चन्द्र—[स्वगतं] किमयमप्याचरेदनुचितम्।

मदन—सखि! सरोजिनी! सत्यं भण! कयेदमाचरितम्।

सरो—[सोत्स्मयं हेमचन्द्रमीक्षते]।

मदन—[स्वगतं] किमियमुत्सुकान्तरा विहरति।

चन्द्र—[सरोषं] अलमनुचिताचरणमुक्त्वा।

सरो—किमर्थमकारणं कुप्यसि? यदि न वक्तव्यमार्यस्य चेष्टितं तन्मूका भवामि।

मदन—[सानुनयं] सखि! प्रिया किल त्वं चन्द्रलेखायाः। अलं हेलया। विविक्तेऽस्मिन्नुद्याने का वा सा प्रियवयस्यं सधैर्यमित्थमालिङ्गितुं प्रभवतीति विस्मयो मे। वद तथ्यम्।

सरो—का वाऽन्या जयलक्ष्मीमन्तरा [सर्वे सकुतुका हसन्ति]।

चन्द्र [स्वगतं] किमत्राप्यासादिता जयश्रीः?

मदन—वद विस्तरेण। येनावामपि श्रुत्वा प्रहृष्यावः।

सरो—दूरादागतावावां दृष्ट्वा कृपाणपाणिरभ्युद्गतो दुर्मतिरितस्तात।

**मदन**—[साश्चर्यं] किमितस्तात् । दैवेन संरक्षिते आवामिहस्थे । ततस्ततः ।

**सरो**—दृष्टमात्रेण वयस्यं वमद्वह्निविलोचनस्तत्तदसहश्रवं प्रावदत्, यावत्सहते सहजक्षमोऽयं तस्य दुरुक्तान्यतिवेलमुद्गतानि । ततोऽनियन्त्रितवचन एव हस्तगतकरवालेनार्यं निहन्तुमुद्ययौ ।

**मदन**—स्वभाव एवायं दुर्धियाम् । ततस्ततः ।

**सरो**—तदा किल वयस्येन तत्करवालो लाघवादपहृत्य पातितस्त्वनान्तिकतटे । स तु भृशममर्षितः प्रहर्तुमारभत मुष्ट्या । केशाकेशी मुष्टीमुष्टि युद्ध्यन्तौ क्षणमलुठतां वसुधायां च । चिरमिदमसहमानेन वयस्येनाधस्ताद्भूमितले पातितस्य तस्य बलवती मुष्टिरेका प्रहिता वक्षस्थलम् । एवमुन्मूलितो दुर्मतिरामूलमित्यलं पूजनावसरे भल्लूकप्रवेशेन । सखि ! वितर फलं समीकपरिश्रमस्य ।

**चन्द्र**—[सहर्षवेगं हेमचन्द्रमालिङ्गितुमारभते । सख्यौ हसतः । सलज्जा तिष्ठति ।]

**सरो**—अयि मदनलतिके एषा वितरतु वा मा वा । आवां तु वितरेव रसालमाहृत्य ।

**मदन**—तथा [उभे प्रस्थिते ।]

**चन्द्र**—कथं यातो मां विहाय ।

**सरो**—उपहारार्हः किल प्रियवयस्यः । [इति उभे पादपान्तरिते ।]

**हेम**—प्रिये ! अलं मौनेन ।

उत्कूजितान्तरमुपैति मनोहरत्वं
पुष्पन्धयेन सरसीरुहमिन्दुकान्ते ।
सेयं प्रवाहरुचिरा किमधित्यकासु
स्रोतस्विनी कलकलेन विना मनोज्ञा ॥८०॥

**चन्द्र**—[सलज्जास्मितं] आर्य! इये पुनर्निदानीभूततया भवतः कृच्छ्राणाम् ।

**हेम**—भवतु, किमनेन। राहुग्रासेनैव राकानाथस्य रमणीयता।

**चन्द्र**—सत्यं । स हि स्वर्भानुरेव भवतः कीर्तिसुधांशोः । स हत इति महानद्य प्रमोदः ।

**हेम**—ज्ञातमिदानीमेव चरणरुजा खिन्ना त्वमिति शुद्धान्त प्रस्तावेन । तदनुचितमत्र तिष्ठन्त्या संलपितुम् । निकुञ्जमिदमाश्रयावहे । इति तां करेणादाय निकुञ्जं प्रविशति ।]

[ ततः उपतिष्ठेते सरोजिनीमदनलतिके । ]

**मदन**—सखि! अन्तरिमौ प्रविष्टौ । अवहिते भवेव ।

**सरो**—एवं ।

**मदन**—शङ्कते हृदयं सेनापतेर्दुर्मतेर्वधेन ।

**सरो**—किं वदासि भवितुं बद्धहस्तं प्रहर्तरि वैरिणि ।

**मदन**—नैवम् । अवरोधवधूजनमात्रोपभोग्ये चन्द्रलेखया संप्रत्यन्वास्यमाने दवीयसि विविक्ते निष्कुटे स हत इति महानालोचनाविषयः पौराणाम् ।

सरो—[सचिन्तं] आम्। किमर्थम्? कथमत्र समागतः? बलिना केन हतः इत्यत्र किं प्रतिविधेयम्?

मदन—यथा नाकृष्यते चन्द्रलेखाया नाम तथा किल संविधातव्यम्।

सरो—न विज्ञातमित्येव शपनीयमस्माभिः।

मदन—बहुमतो भूपतेरयम्। तदस्य हन्तुः शिक्षणाय नूनं प्रयतेत। तदस्माभिर्नितान्तं रक्षणीयमिदं वृत्तम्।

सरो—अनेन यदि यत्किंचित्संभविष्यति हेमचन्द्रस्य, तत्कृच्छ्राय भवेत्प्रियसख्याः।

[नेपथ्ये।]

क्लिष्टा रुजा चरणयोरिति चन्द्रलेखा
देव्या नितान्तगतयातनया विसृष्टः।
आदाय भेषजममोघमनन्तदासः
प्रेम्णाऽभिगच्छति सरस्तटनिष्कुटं तम् ॥८१॥

उभे [श्रुत्वा सभयं] का गतिः।

सरो—प्रस्थापय प्रियवयस्यं त्वरितम्। यावदनन्तदासमभिमुखीभूय सल्लापयिष्यामि। [इति निष्क्रान्ता।]

-निकुञ्जमुखे तिष्ठन्ती। [क्लिष्टा रुजेत्यादि पठति।]

·[प्रविश्य सविषादं] किमागच्छत्यनन्तदासः।

अथ किम्।

हेम—[ससंभ्रमं प्रविशति।]

चन्द्र—[सगद्गदं] त्वरितमपक्रामत्वार्यपुत्रो दक्षिणमार्गेण।

हेम—[सविषादम्।]

पार्श्वप्रकीर्णचिकुरं पुलकाभिराम-
मामीलितेक्षणयुगं घनघर्मसिक्तम्।
विस्रंसिनीविवसनासहरम्यमध्यं
पश्यामि केलिकमनीयवपुः पुनः किम् ॥८२॥

चन्द्र—आर्यपुत्र। [इत्यर्धोक्ते।]

मदन—प्रियसखि मुञ्च प्रियसखं पुनर्दर्शनाय। आयातीवानन्तदासः।

चन्द्र—आर्य क्षम्यताम्।

हेम—तथा। [इति चन्द्रलेखां पश्यन्नेव निष्क्रान्तः।]

मदन—कैतवेन त्वया प्रोक्तः सखि यश्चरणामयः।
स वियोजयिता जातः प्रियप्रणयिनः पुनः ॥८३॥

आवामपि तमगदङ्कारमेव पश्यावः।

चन्द्र—कथं गत एव सः? [करे पश्यन्ती] दिष्ट्या परिवर्तितमावयोरङ्गुलीयकम्। तदपि सुखाय मे यत्पश्यन्ती तस्येदं किञ्चिदिव निर्वृता भवेयम्॥ [इति निष्क्रान्ते।]

॥ चतुर्थोऽङ्कः ॥

# ॥ पञ्चमोऽङ्कः ॥

[ ततः प्रविशति आसनस्थो राजा सचिवः सर्वदमनश्च । ]

राजाः—किमिदमत्याहितं कृतं प्रतापरुद्रस्यैव मगधराज्येऽवरोधजनोद्याने सेनाधिप एव निहत इति न किमस्माकं परिभवाय? कं भवान्मन्यते तस्य हन्तारम् ।

सर्वः—महाराज! नालमन्यैः प्रवेष्टुमिदं नगरमस्मच्चाराविदितम् । तदन्यदेशीयैर्नायं हत इति निश्चप्रचं ज्ञायते । सम्यगनुदर्शनेन तत्स्थलस्य नूनमेकेनैव स हत इति निरूह्यते । को वा स एको दुर्मतेरपि बलीयानिति तावन्न शक्यते निश्चेतुम् ।

राजाः—भवतु किं वा भवेदस्य हनने कारणम्?

सर्वः—शतवारमप्यापृष्टा अवरोधवधूजनवयस्या प्रतीहारिण्यश्च "यद्यवगतं ताभिरव स्यादि"ति मत्वा ।

राजाः—अस्मद्देश्येन तदतिशायिवीर्येण केनाप्येकेन अस्फुटकारणं स निहत इति किल पिण्डितोऽर्थः ।

सर्वः—अथ किम् ।

राजाः—यद्यस्फुटं कारणं मरणान्तमुद्योजयति कर्तुं, तन्नु भवेद्वनिताविषयकम् ।

सर्वः—प्रायशो दृष्टमेवम् ।

राजाः—एवं चेत्का सा विवादविषयो ललना ?

सर्वः—कथमन्तःपुरेऽपि युज्यते दुर्मतेर्मानसव्यापारः ?

राजाः—मैवम् । चन्द्रलेखां परिणेतुं स कृतयत्न इति कदाऽपि मम कर्णपथं गता वार्ता । चरणरुजा क्लिष्टा तदैव सा गता दूरस्थं तदुद्यानं एकान्तनिषेवणायेति च ज्ञायते । निधार्येदं मनसि सम्भाव्यतां वृत्तम् ।

सर्वः—विषयीभूतमद्य मे प्रज्ञाचक्षुषः । इदमेवम् । एकान्तगतां चन्द्रलेखां द्रष्टुं तदुद्यानं गतो दुर्मतिः । हेमचन्द्रेण साऽनुरज्यत इति किल शङ्कितमस्माभिः । सोऽप्येवमेव तत्र समापतन्नन्तरा दुर्मतिना दृष्टः । परस्परकलहे च तं निहन्ति स्म । नान्यः प्रभवति दुर्मतेर्वधाय ।

राजाः—युक्तमुक्तं सचिवसत्तमेन । [सक्रोधं] आः पापाधम! दुराचार! किं बलगर्वितः किमपि कर्तुं न शङ्कसे! किं ममापि सेनापतिं निघ्नन् जीवितुमिच्छसि? अद्य एव त्वां द्विधा करोमि करवालेन। [सस्मरणं] कथं त्वमपि तस्य महात्मनः कलाधरस्य जातः? वैदेहयुद्धे प्राणरक्षक इति कृतस्त्वय्यादरः । महान्विज्ञ इति च कृतो बहुमानः । कथमेवम्भूतस्त्वम्? [सविषादं] निष्कुटएव मे सेनापतिं निहतं श्रुत्वा किं न हसिष्यन्ति महीक्षितः? अरे! दुर्विदग्ध! किमिदमप्रधृष्यं मागधमपि शिथिलयितुमिच्छसि? किमु कर्णे जप्तः प्रतिमहीपतिभिः? [सवैक्लव्यं] वयस्य । दुर्मते!

कथमित्थमवसानाय सृष्टोऽसि? [सामर्ष] मन्यस्व राजदारिका-समाकाङ्क्षणफलमिदमिति। [साक्रोशं] सर्वदमन! किं वाऽत्र प्रतिविधातव्यम्।

सर्वः—महाराज! मन्त्रयितव्यमेवेदं, यदद्य निरध्यक्षा वरूथिनी। मानी च पराजितो वैदेहः। न स भवेदकृतयत्नः पराभव निर्हाराय। विचिन्त्यैतदुचितं संविधातव्यम्।

राजा:—[सोल्लुण्ठनं] अपि वयमेनं वधकं सेनानीं कुर्मः।

भीत्या कामेन दाक्षिण्यात्कृतमन्तुं महीपतिः।
न क्षणाच्छिक्षयति चेद्भविता तदराजकम् ॥८४॥

स्यादपि बलमत्तः सैनापत्यकामनया दुर्मतिं हतवान्।

सर्वः—अन्यथा गृहीतं महाराजेन।

यौधाधिपत्ये न रतिं विधत्ते न राजभोगेषु समुन्नतेषु।
काव्याङ्गनायाश्चतुरिम्णि बद्धभावस्सदाऽयं रमते तयैव॥

राजा:—तदेवायं हन्तव्यः, यदा सगर्वो चन्द्रलेखां सादरं पश्यन्नवर्णयत्। कलाधरे कविकुलेषु च दाक्षिण्येन तदा मुक्तः। तत एव हि तेनेदमत्याहितमाचरितम्। औदासीन्यानर्ह एवायं वैश्वानर इव स नूनं शिक्षणीयः।

सर्वः—तस्य मन्तुं तु निर्णीय दण्डयेम महीपते।
अनुमेयापराधानां शिक्षणं न हि युज्यते ॥८६॥

राजा:—नेदमुचितं नाम।

एवंविधानि कार्याणि समक्षं न हि कुर्वते ।
अनुमानेन विज्ञाय दण्ड्यास्तत्कार्यकारिणः ॥८७॥

[क्षणं विचिन्त्य] कोऽत्र तिष्ठति ।

प्रतीहारी:—[प्रविश्य] आज्ञापयतु देवः ।

राजाः—आहूयतां मद्वचनाद्धेमचन्द्रः ।

प्रती:—यथाऽऽज्ञापयति देवः । [निष्क्रान्ता ।]

सर्वः—कथमयमकारणं तं निहन्तीति शङ्कते मनः ।

राजाः—ननु कारणादेव । [सदाक्षेपं] कथं स धूर्त इव ।

[ततः प्रविशति हेमचन्द्रः ।]

हेमचन्द्रः—[स्वगतं ।]

तामिन्दुबिम्बवदनां ललिताभिरामां
लज्जानतस्मितमुखीं रतिखेदखिन्नाम् ।
सञ्चिन्तयन्नखिलवस्तुषु निःस्पृहोऽयं
तद्दर्शनोत्सुक उदञ्चति मेऽन्तरात्मा ॥८८॥

अत्र महाराजः—[प्रकाशं] महाराज! स्वस्ति भवते ।

राजाः—[सरोषं] कथमस्य दुर्भगस्यापि स्वस्ति भवादृशपरिवारितस्य ।

हेमः—[स्वगतं] कथं रुष्ट इव? [प्रकाशं] यदि परिहीयते कुशलमस्माभिः तर्हि क्षणान्निर्गच्छामः ।

राजाः—कर्तव्यमखिलं कृत्वा किं वा निर्गमनेन।

हेमः—किं दुष्कृतमस्माभिः?

राजाः—अलं गोपनेन। स किल त्वया निहतो दुर्मतिः।

हेमः—अथ किम्। सत्यं मयैव निहतो दुर्मतिः।

राजाः—अरे धूर्त! कथं तमपि हत्वा निर्भीकोऽसि?

हेमः—तस्य दुष्टस्य शिक्षणेनोपकृत इव महाराजः।

राजाः—अरे प्रतारकपरिवृढ! हत्यां कृत्वाऽप्यात्मानं समर्थयसि? एवंविधमपमानं संपाद्य मे किं जीवितुमिच्छसि? अद्यैव त्वामनेन करवालेन निहन्याम्। [इत्युत्थातुमुद्युङ्क्ते।]

सर्वः—[अपवार्य] नहीदं न्याय्यं नाम शिक्षणमनिश्चितागसः।

राजाः—तर्हि?

सर्वः—विचार्य यथान्याय्यं कल्पयामः।

राजाः—विचारयतु भवान्।

सर्वः—हेमचन्द्र! किमर्थं निहतो दुर्मतिः।

हेमः—शृणोत्वार्यः। स किल दुर्मतिर्मम रत्नकृपाणलाभाद्भृशममर्षितोऽविरतकृतोद्यमो निहन्तुं माम्। सौशील्येनैव मे तममर्षमपोहयितुकाम प्रीतिबन्धमेव निक्षिप्य तस्मिन्नुदासीन एवाभवम्। आज्यसेकेनेव वैश्वानरः स किल सन्दीपितासूयो मनोविनोदायैकान्तनिष्कुटगतं समीकानुद्यतम-

प्रहरणं मां सकृपाण उपेत्य तत्तदसह्यं वदन्प्रहरति स्म। महाराजस्य सेनापतिरित्यनुचिन्तयन्नहमनवसानायैव तस्य प्रायते। मम तु स निधनाय प्रवृत्तः। अगतिकेन मया प्राणरक्षणाय प्रस्थापितो वैवस्वतसदनम्। महाराजरक्षणार्हे मयि निष्कारणममर्षितस्य रिक्तहस्तेन अधर्मयुद्धमाचरतस्तस्य पापिनो वधेन किं नाम नोपकृतो महाराजः?

राजाः—उपकृतो वा महाराजः सेनापतिवधेन? अलमलं प्रलोभनवचनैः। कः कोऽत्र तिष्ठति?

प्रतीः—आज्ञापयतु भर्ता।

राजाः—आहूयतामनङ्गदासः।

अनङ्गदासः—[प्रविश्य] प्रभो! अयमस्मि!

राजाः—अत्रैव सर्वाण्यवमोच्य भूषणानि निष्कास्यतामयमस्मद्देशात्।

हेमः—प्रियं नः। उचित एवायं दण्डः शीलमविज्ञाय कृतोपासनस्य मे।

सर्व—[स्वगतं] महानयं विपर्ययः प्रलयमूलं भवेत्। यत एष हि निष्कासितः प्रतिमहीपैरनुनीतोऽवस्कन्दयाति पत्तनमिदम्। कथमद्य मोचनीयो महाराजोऽस्मात्सङ्कटात्?

अनङ्गः—[अवमोचयन्नाभरणानि] किमिदम्!! [खिन्नगात्रो वेपते]

राजाः—किम्! किम्!

अनङ्गः—[सकम्पं] इदमङ्गुलीयकं राजदारिकायाः।

**हेमः**–[स्वगतं] उपगतं नु परिवर्तनेनेदं ममाङ्गुलिम् । तद्गतेन मनसा किल चिरेणापि न दृष्टमिदम्?

**सर्वः**–[स्वगतं] मार्जारकरात्कीरः काकोदरमुखमनुप्राप्तः ।

**राजाः**–[ससंभ्रमं] किं चन्द्रलेखाकराङ्गुलीयकं? [आदाय पश्यन्] अरे धूर्त! कितव पण्डितंमन्य! जार! अथवा चोरस्त्वम् । कथमिदमुपात्तं त्वयाऽन्तःपुरचर्या मे कन्यकाया नाममुद्राङ्कितम् । दुर्विदग्धमेनं पण्डितमामन्त्रयमाणेन वञ्चितोऽस्मि दैवेन । अरे पापाधम हतसेनापतेरद्य ममान्यः पराभव आपादितस्त्वया । [क्षणं विचिन्त्य, करिष्याम्येवम् ]। अनङ्गदास! बन्दिगृहं नीत्वा रक्षितव्योऽयं जागरूकैः । रक्षितव्यश्चायमंगुलीयकोदन्तः । सर्वदमन! गच्छामि तावदवरोधम् । आज्ञापय दण्डवर्गं कारागृहगुप्त्यै ।

**सर्वः**–तथा ।

**राजाः**–[निष्क्रान्तः ।]

**सर्वः**–[स्वगतं] अङ्गुलीयकच्छलेन रक्षितो महाराजो नियत्या । निर्वर्तयामि ताव न्नरपतेर्निदेशम् । [इति निष्क्रान्तः ।]

**हेमः**–आचरन्नपि कार्याणि न्याय्यानि भुवि मानवः ।
आसादयति चेद्दण्डं तद्दैवस्यैव चेष्टितम् ॥८९॥

[इत्यनङ्गदासेन गृहीतहस्तो निष्क्रान्तः ।]

॥ पञ्चमोऽङ्कः ॥

## ॥ षष्ठोऽङ्कः ॥

---

[ ततः प्रविशति कलाधरः । ]

कलाधरः—मानापमानावपि तोषदुःखे
विचागमं वाप्यथ तस्य नाशम् ।
प्राप्नोति जन्तुर्नियतेर्बलेने-
त्येतद्विचिन्त्याऽपि नमेऽस्ति शान्तिः ॥९०॥

आश्चर्यमिदं प्रतिभाति यदयं प्रतापरुद्रोऽपि हेमचन्द्र एवमाचरदिति । अथवा प्रकृतिरेवेयं राजसाधारणी ।

चिरपरिचयबद्धप्रेमभावोऽपि भूपः
कलयति भृशपापं नूनमल्पिष्टहेतोः ।
निजजलभररक्ष्युत्तुङ्गतीरं विभिन्दन्
ह्रद इव शिखरिस्थः क्षीणमेत्यव्यवस्थः ॥९१॥

अथवा नेदमुचितं महाराजे दोषारोपणं नाम । अविदितं स्यात्तस्य दुर्मतेर्दुर्वृत्तम् ।

मुग्धास्ताः कुलकन्यकाः स तु शठस्तैस्तैर्विलोभ्य क्रमैः
सैनापत्यबलेन कर्षति परं पूर्वं यथा रावणः ।
सोऽयं दुर्धिषणो बलेन नियतेर्लब्धावसानो यदि
प्रासव्या तु मुदेव यत्पुरमिदं निष्कण्टकत्वं गतम् ॥९२॥

अरे हेमचन्द्र! कथं न जानासि पाठितोऽपि शुक इव राजनीतिम्। किमु फलमिदं महाराजप्राणरक्षणस्य! नैतदुचितम्। फलमिदं राजदारिकाप्रेमबन्धस्य। नाविज्ञः पुनर्हेमचन्द्रः। अपराधोऽति परं यौवनमेव तस्य। अथवा तस्य वीर्यरूपातिशयः। अयि चन्द्रलेखे! किमित्थमवसितुमेव कवितनये कृतोऽनुरागः। किमु प्रहृष्यसि हृदये तस्य कारागृहप्रक्षेपेण। न किल त्वया चिन्तितं "असमेऽनुराग आपत्कर इति। किं त्वयाऽद्य करणीयं मुग्धया तपस्विन्या। हा हेमचन्द्रस्य दुर्गतिः। कथमयं कृतमधुराहारः काले काले, कदन्नं भोक्ष्यति कारागृहे। सुखं सुप्तः स्पर्शकोमलेषु शयनेषु कथं वा निद्रास्यति मे तनयः करोपधानो मेदिन्याम्। अलं प्रलापेन। अन्याय्यः खलु तूष्णीं भावः। कथं द्रष्टव्यो महाराजः? किमु दर्शव दहेदतिरुष्टः? अथवाऽलं चिन्तया। भगवतीप्रसादाद्यतिष्ये तावदुन्मोचनाय हेमचन्द्रस्य।

[ इति निष्क्रान्तः। ]

॥ विष्कम्भः ॥

[ ततः प्रविशति राजा। ]

राजाः—यत् प्राणरक्षणकरो विबुधैस्समीड्यः
प्राक्षेपि बन्दिनिलये कितवैकयोग्ये।
कृत्वेव पापमिह घोरतमं प्रमादात्
संविग्नमद्य हृदयं मम धर्मनद्धम् ॥ ९३॥

अरे हृदय! किमर्थं मुधा परितप्यसे? किमिद-मन्याय्यं यच्छिक्षणं दुर्मतिहन्तुः। यदि दाक्षिण्येन विमोचयेयमेनं, कथं वा मां बहुमन्येरन्प्रजाः। अथवा

एकेन हस्तेन विधाय दण्डं
प्रजासु मित्राहितनिर्विशेषम्।
आवर्ज्य इत्यन्यतरेण हार्दात्
किं वा विधाता विदधे नृपाणम् ॥९४॥

दुष्करमिदं पारावारावरोधनमिव पृथ्वीपतीनां प्रजा-संरक्षणमिति।

अप्रगल्भमनुकम्पया युतं चण्डमेव भृशदण्डकारिणम्।
त्यक्तसौहृदमपेतसंश्रयं वक्ति बालिशजनो महीक्षितम् ॥९५॥

अलं परितापेन। मया किल तस्य पौरुषं पाण्डित्यं चालक्ष्य रत्नकृपाणो दत्तः। तया तु रूपसंपदनुरूपोऽनुरागोऽङ्गुलीयकमुखेन प्रतिपादितः। हन्त! किं कुर्याम्?

**प्रतीहारीः**—[प्रविश्य] देव! कलाधर उपागतः।

**राजाः**—[स्वगतं] किमर्थमागच्छति [प्रकाशं] प्रवेशय।

[ कलाधरेण सह प्रविश्य। ]

**प्रतीः**—अत्र भर्ता। गच्छत्वार्यः।

**कलाः**—स्वस्ति महाराजाय।

राजा:—उपविशत्वार्यः ।

कला:—[उपविश्य] कच्चित्सापराधं मन्यते महाराजो हेमचन्द्रम् ?

राजा:—कोऽत्र संशयः ? किं धर्म्यो दुर्मतिवधः ?

कला:—किं न रक्षणीयाः प्राणाः शरीरिभिः ?

राजा:—अथ किम् ।

कला:—तर्हि कथमपराधी भवति निजप्राणरक्षणार्थं कृतशत्रुवधः ?

राजा:—तत्किल महाराजाय निवेद्य तेनैव निर्वर्त्यं कर्म ।

कला:-अपीदं शक्यं यत्करवालेन क्रूरं प्रह्रियमाणस्य मध्ये विद्रुत्य राजनिकटे निवेदनं नाम ?

राजा:—नहीदं शक्यम् ।

कला:—अत एवैवमाचरितं हेमचन्द्रेण । अगतिकेन निहतो दुर्मतिरिति ।

राजा:-दुर्मतिरेव हेमचन्द्रमादावभियुनक्ति स्मेत्यत्र किं वा प्रमाणम् ? निहतः पुनर्दुर्मतिः ।

कला:-महाराज ! नखल्वविदितमिदं भवतो, यदहमेकपुत्रः पुत्रजीवितश्चेति । सहजक्षमेण भवता सफलीकरणीयैव ममेयमभ्यर्थना । तुष्येयं तावदतिवेलं चिरसंमानादपि सहभोजनादिभिरद्य मे तनयस्य विमोचनेन ।

कञ्चुः-[प्रविश्य] देव्यो विज्ञापयन्ति 'हेमचन्द्रस्य काराप्रक्षेपश्रवणमात्रेण सुता चन्द्रलेखा प्रवाताहतेव कदली निपत्य

मूर्च्छामापन्ना । नऽद्यापि सत्वमापादिता । भिषगुत्तमाश्चा-
कारिताः । शुश्रूषामहे च वयं भवतो निदेशम्" इति ।

राजाः—[स्वगतं] किं वाऽत्र संविदध्याम्? [वैक्लव्यं नाटयति ।]

[प्रविश्य सर्वदमनः । ]

सर्वः–अनुष्ठितो महाराजनिदेशः ।

राजाः–भवतु । एष किल कलाधरः प्रार्थयते पुत्रक्षमापणं निजप्राणरक्षणाय कृतो वधो युक्तक्षम इति प्रतिपादयन् ।

सर्वः–सत्यमिदम् । अवगतं मया वृषसेनमुखादिदानीमेव यद्दुर्मतिश्चिरायाऽपि तस्याऽऽसीज्जिघांसुरिति ।

राजाः—अप्येवम् ।

दूतः–[प्रविश्य] वर्धतां महाराजः । इदमन्तपालस्य विज्ञापन-पत्रम् ।

राजाः—सर्वदमन! गृहीत्वा वाच्यताम् ।

सर्वः–[गृहीत्वा वाचयति ।] "सकलभुवनपतिमण्डलकिरीटमणि-सन्दीपितनखांकुरयोः महाराजचरणपङ्केरुहयोः शतकृत्वः प्रणिपत्यान्तपालोऽब्जनाथो विज्ञापयति । पूर्वं पराजितोऽसौ वैदेहः वररुचिः काश्मीरनाथेन, परिसृतमहीपतिभिश्च कृतसन्धिः परानन्दादिभिरुद्योजितसर्वसेनासन्नाहः सांपरायिकः प्रस्थित इति चारमुखादवगतम् । विदित्वा देवः प्रमाणम्" इति ।

**राजाः**–[सरोषं] किमेते सह मिलित्वा समायान्ति? लुनामि तावत्पुच्छाञ्चलम्। अरे दूत दृढवक्र! गत्वा तमन्तपालमादिश मद्वचसा तत्रत्यैस्सहावरुध्य स्थातुम्। अनुपदमनुप्रेषयामि पृथनागणम्।

**दूतः**–यथाऽऽज्ञापयति देवः। [इति निष्क्रान्तः।]

**राजाः**–सचिव। प्रस्थाप्यतां सेना। वहाम्यहमेव पृतनाधिपत्यम्।

**सर्वेः**—सर्वक्षमोऽपि भवान्न स्वयं प्रथमतो गन्तुमर्हति। न चायमाचारः। तदेकः परीक्षितवीर्यो नियोजयितव्यो वाहिनीपत्ये।

**राजाः**–कोऽत्र वर्तते तदर्हः समवेतानां महीपतीनां विजयाय?

**सर्वेः**–किं न हेमचन्द्रः? स किल प्रकटितपराक्रमो विदेहयुद्धे सांप्रतं च निहत्य दुर्धर्षं दुर्मतिम्।

**कलाः**–आदिशतु महाराजः। वयं किल धृतप्राणा मागधाय।

**राजाः**–आहूयतामनङ्गदासः। शृणुमो यदयं वदति।

[ निष्क्रम्य प्रतीहारी तेन सह प्रविशति।]

**अनङ्गः**–विजयी भवतु महाराजः।

**राजाः**—पृच्छामि त्वामानन्तरिकं दुर्मतेः। अद्य किल श्रूयते प्रतिमहीपतयः पञ्चषाः समीकसन्नद्धाः समायान्तीति। अपि शक्तोऽसि सेनानिर्वाहाय?

अनङ्गः–सन्नद्ध एवास्मि महाराजप्रतापातपावभासितो यथाशक्ति निर्वोढुम्। तथाऽपि............।

राजाः–किं तथाऽपिना? पञ्चषाः समायान्तीति किल विचारयसि? सचिवः किल सर्वदमनः समुद्योजयत्यनुप्रेषितुं हेमचन्द्रम्।

अनङ्गः–यद्येवमनुगृहीतोऽयं पृतनागणः। समभिषिच्य सैनापत्ये प्रस्थाप्यतां हेमचन्द्रः, येन वयं नूनं विजयिनो निवर्त्स्यामः।

कलाः–[स्वागतं] अनुकूलो विधिरस्माकम्।

राजाः—भवतु। सहृदयतया किलोपकर्तव्यः समीकः। कथमयं धिक्कृतिदूयमानः करिष्यति सप्रेमभावं साम्परायम्।

सर्वः—नाऽयं तथाविधः–

मनुते पुराकृतं तं बहुमानं शीलवान् वीरः।
न हि किल दुरुक्तवानयमालोकयति स्म नापि विद्वेषात्॥

कलाः–महाराज! यद्वयं कृतभोजना देयप्राणा एव भवताम्।

राजाः–सचिवोत्तम! स्वयमेव गत्वा समानीयतां हेमचन्द्रः। ज्ञास्यामस्तावत्तस्याभिसन्धिम्।

सर्वः–तथा। [इति निष्क्रान्तः।]

अनङ्गः–सम्यगालोचितमदूरविजयेन महाराजेन।

[ ततः प्रविशति हेमचन्द्रेण सह सचिवः । ]

**हेमचन्द्रः**–वर्धतां महाराजः । इदमत्र विज्ञापना महाराजस्य । ज्ञायते तावन्मया कृतसेनापतिवधेन संपादितमिदमनिष्टं महाराजस्येति । यद्वयं कृतसम्मानास्तदा तदा महाराजेन निर्हरणीयमिदमस्माभिः । विशेषतश्च ममानिष्टानिदानभूततया जीवितदानेनापि । अत आज्ञापयतु महाराजो भटनिर्विशेषमभियातुं समीकम् ।

**राजाः**–दृष्टोऽस्मि ते सौशील्येन । वचनमिदमुचितं तवैव । अपि संमन्यसे पृतनाधिपत्यमुपादाय समीकपरिश्रममनुभवितुम् ।

**हेम**–यदि विस्रब्धो मयि महाराजस्तन्मे सुकृतपरिणामः ।

**राजा**–अनङ्गदास! त्वमेव हेमचन्द्रमाभूषय सर्वैराभरणैः ।

**अनङ्गः**–अनुगृहीतोऽहम् । [ इत्याभूषयति । ]

**राजाः**–हेमचन्द्र!

मांऽस्तु प्रमादो रिपुयोधवर्गे
स्तोकेऽपि यत्कूटसमीकिनस्ते ।
रक्षन्पुरस्ताद्बलमात्मनीनं
सापत्नमास्कन्दय चक्रजालम् ॥९७॥

सचिवः सर्वदमनोऽपि ते पार्श्वरक्षको भवतु ॥

**हेमः**–यदादिशति महाराजः ।

**राजाः**–सचिवमणे! सर्वदमन! विजयश्रीपरिष्कृतेनानेन त्वामचिराद्दिदृक्षे।

**हेमः**–महाराज! तात! आमन्त्रये वो विजयनिवर्तनाय।

**कलाः**–विजयी प्रतिनिवृत्य राज्ञः प्रकटितकृतज्ञो भव।

**हेमः**–जयश्रीरस्तु मगधानाम्!!

**सर्वेः**–जयश्रीरस्तु मगधानाम्!!

**राजाः**–प्रतिष्ठन्तां पुनर्जयाय मे सैनिका हेमचन्द्रस्याध्यक्षे।

[इति हेमचन्द्रहस्ते खड्गं मुक्तकक्षं कृत्वाऽर्पयति।]

**हेमः**–तथा। [इति सर्वदमनहेमचन्द्रावनङ्गदासेन सह निष्क्रान्तौ।]

**राजाः**–हेमचन्द्रमनुप्रेष्य यन्मनो मुदमेति मे।
करस्थामिव पश्यामि परां विजयसंपदम् ॥९८॥

आर्य! कलाधर विश्राम्यतु भवान्। इतिवृत्तमावेद्य तोषयामि तावदस्वस्थां चन्द्रलेखाम्।

[इति कलाधरेण निष्क्रान्तः।]

॥ षष्ठोऽङ्कः ॥

# ॥ सप्तमोऽङ्कः ॥

[ ततः प्रविशति चारः संवर्तकः । ]

चारः—आज्ञप्तोऽस्मि काश्मीराधिपेन महाराजकमलनाथेन "चार संवर्तक! एष किल हेमचन्द्रो रात्रिन्दिवमपि दिनत्रयं सन्नद्धीभूयाभियुद्ध्यमानोऽपि दुराधर्ष एव वर्तते । अजेयोऽयमनीकेन पुनर्वक्ष्यमाणेनैव निहार्यः । अवगतमद्यैव, यन्मागधेनापमानितोऽपि बन्दिगृह बन्धादिना तत्सुतायां चन्द्रलेखायां बद्धानुरागस्तां परिणेतुकाम इत्थमतिव्यवसितो युद्ध्यतीति । नूनं स त्यक्तप्रहरणो विद्राविष्यति यदि चन्द्रलेखा हनिष्यते । अतो यथाकथंचित्त्वरितं चन्द्रलेखा प्राणैर्वियोजनीयेति"। परिज्ञातमिदमत्र समागतेन, यद्धेमचन्द्रस्य चिरयुद्धमनुचिन्त्य संप्राप्तचिन्तासाध्वसा चन्द्रलेखा निजकुलदेवतां कात्यायनीं पूजयितुं गताऽनेनैव निष्कुटपथेन प्रतिनिवर्तत इति । तदास्थाय मार्गमभिलषितं संपादयामि ।

[ ततः प्रविशति चन्द्रलेखा सखीभ्याम् । ]

चन्द्रः—ज्ञात्वापि विक्रमनिधिं कविपुङ्गवं तं
दुर्जेयमप्यखिलभूपतिभिः सुयुक्तैः ।
यद्दीर्घमापतति घोरतरं समीकं
रात्रिन्दिवं तदिह मां तरलीकरोति ॥९९॥

मदनः–निर्वृता भव। कल्याणमस्माकं कात्यायनी विधास्यति।

सरो॰-नूनमचिराद्विजयिनमभिनिवर्तमानं द्रक्ष्यसि प्रियवयस्यम्।

चन्द्रः–[सतोषं] तथैव मन्ये यत्स्फुरति मे वामं नयनम्।

संवः—[स्वगतं] अयमेव काल आत्मन उपस्थापनाय। [पुरतो गत्वा] स्वागतं वः।

चन्द्रः—[ससंभ्रमं स्वगतं] कथमत्र ब्राह्मण इव? [प्रकाशं] आर्य वन्दे। [इति प्रणमति]।

मदनः–किमस्माकं सुशकमेवेदं "को भवान् विजने तिष्ठती"ति।

संवः—न किल रहस्यं नाम किञ्चिदवाच्यमस्ति विप्रस्य?

मदनः–तर्हि कृतार्था वयम्।

सरो॰–[अपवार्य] मदनलतिके! कुतोऽयमसांप्रतमाचरति कृतप्रणामायाः सख्या अनुक्ताशीर्वचनः?

मदनः–[अपवार्य] लीनहृदयाः खलु परस्मिन् ब्रह्मणि महात्मानः।

सरो॰–को भवानत्र विजने तिष्ठति?

संवः–का यूयम्?

मदनः–इयमस्मद्राजदारिका। आवां वयस्ये। आवेदयतु भवान् क इति।

संवः–किमियं राजदारिका?।

सरो॰[स्वगतं] –कोऽयमनीहो निजवृत्तकथनस्य? [प्रकाशं] ननु पृच्छामि को भवान्? किमर्थमत्र समागत इति?

संव:—[अनाकर्णितकेन मदनलतिकां प्रति] किमियमेव राजदारिका ?। अनूढेव ?।

मदनः—आर्य! क्षन्तुमर्हसि ? संवरणार्हाणि राजगृहरहस्यानि ?

चन्द्रः—[स्वगतं] किमर्थमेष ब्राह्मणः पृच्छत्यसंगतानि।

सरो:—[सरोषं] कथमनुत्तरोऽसत्प्रश्नानां यत्किञ्चिदाकांक्षसे वेत्तुं राजगृहरहस्यम्? किमु भवान् सत्यमग्रज एव ?

संव:—[सभयं स्वगतं] विवृतः किं मे वेषः? [प्रकाशं] कुतोऽस्थाने कोपा वयस्यायाः

मदनः—भवतु! महाब्राह्मण! को भवान्? किमर्थमागतः ?

संव:—वैदेहाभिजनोऽहम्। क्षेत्राटनसमुद्यतेन पथिकवर्गेण सङ्गत्याद्यैवात्र सन्निहितः।

चन्द्रः—[सौत्सुक्यं] आर्य! किञ्चिद्वेत्ति भवान् सीमतटे संभवन्तं युद्धम् ?

संव:—प्रत्यक्षतश्च दृष्टं दिनत्रयं। अत एव च विलम्बितमागमनम्।

चन्द्रः—वयमुत्सुका आयोधनवृत्ताकर्णने। अनुगृह्णातु महीसुरो याथातथ्यकथनेन।

संव:—[स्वगतं] तदर्थमेवायमारम्भः। [प्रकाशं] शृणुथ यदि कौतुकम्। प्रथमतः किल मगधानिमान् प्रवेष्टुं कृतसन्नाहे वैदेहसैन्ये अन्तपालेनाब्जनाथेन निरुद्धा गतिः। अल्पी-

यसीं वीक्ष्यैतत्पृतनां विभेत्तुमिव तं गारुडं व्यूहं शरान-
वर्षत्परानन्दः। करवालकरः काश्मीरनाथः प्रत्यरुणत्पार्श्व-
मेकम्। एकान्ततश्च वररुचिराविश्य विभेद। इत्थमायो-
धने घोरे प्रवृत्तेऽचिरेणैव स किलान्तपालः क्षताङ्गः
शिश्ये शताङ्गे।

सरोः—मुह्यतीव मनः। ततस्ततः।

संवः—तत्क्षणादेव दिवमिव भिन्दन्निनादेन कम्पयंश्च वसु-
न्धरामाविरभूत्सैनिकपारावारो मागधानाम्। दृष्ट्वेमामसंख्या-
मनीकिनीं प्राप्तक्रुधो महीक्षितोऽगणितशरीराः हस्तगतैः
प्रहरणैर्हन्तुमारभन्त। एवमेवाविज्ञातशरीरौ सर्वैरप्यायुधैः
दिनद्वयं दिवारात्रमयुध्येतामुभावपि पक्षौ। तदा तु सर्व
दमन इत्येकः भृशं रुष्ट आदाय कृपाणं कमलनाथं हन्तु-
कामः प्रविष्टो रिपुचमूम्। तदा किल भृशममर्षिताः प्रति-
भूपतयस्त्यक्तुकामा इव जीवितमतिवेलं प्रहर्तुमारभन्त।

मदनः—[सोद्वेगं] ततस्ततः।

संवः—अवसितमायोधनं कर्तुं कृतयत्नावुभौ। तदा च स्वकीयं
नाम यथार्थं कुर्वन्तमन्वीक्ष्य सर्वदमनं परममर्षितः परा-
नन्दः स्वसैन्येन निरुन्धन् चिरोद्यमेन तं बन्दीचकार।

सरोः—सचिवोत्तम! कथं त्वमपि बन्दीकृतः?

संवः—दृष्ट्वेदं दीनमाक्रन्दत्सु मगधयोधवर्गेषु गुहाविनिर्गत
इव कण्ठीरवो धृतिरिव धृतशरीरो हेमचन्द्र इति कश्चन

दर्शनीयं रत्नकृपाणं करे कुर्वन् गंभीरं प्रविष्टो वैदेहवरू-
थिनीम् । तदा किल दृश्यमभूदायोधनम् ।

वैदेहो नष्टदर्पो भुवमगमदहो लोहितेनोक्षिताङ्गः
सोऽयं काश्मीरनाथस्त्वसुकलितमतिः कातरः प्राद्रवच्च ।
भूपास्त्वन्ये प्रवृत्ताश्चकितनिजचमूप्रत्यवस्थापनार्थं
हाहाकारैः कठोरैस्त्रुटितकरपदैश्चुक्रुशेऽनीकिवर्गैः ॥

चन्द्रः—[सश्लाघं] आर्यस्य दुष्प्रसहं तेजः ।

संवः—[स्वगतं] इतः परमत्र मिथ्योदन्तः प्रकटयितव्यः । [प्रकाशं] यदाऽयं मूर्तिमानिव कालरुद्रो निजकरवालेन परानीकं निघ्नन्नुन्मूलयामास । तदा किल रुष्टः परानन्दोऽविज्ञातः पृष्ठमागत्य सकरवालं हेमचन्द्रं दृढमाबध्य पातयामास वसुधातले ।

चन्द्रः—[सवेगं] ततस्ततः ।

संवः—यावदयं प्रायतत तद्बन्धादुन्मोचयितुमात्मानं तावत्पार्श्वासन्नेन सेनापतिना सहस्रयोधिना हन्त ! निजकरवालेन च्छिन्नं तस्य काकपक्षरमणीयं शिरः ।

चन्द्रः—हा—[इति मूर्च्छति] ।

मदनः—[सविषादं] हेमचन्द्रस्याप्येवं दुर्गतिः ।

सरोः—हताऽद्य चन्द्रलेखा ।

दनः—वयं च मगधराज्यमपि। अतर्कितमिदमवासितिमेष्यति मगधराज्यश्रीरित्थमिति।

वरोः—[सातङ्कं] का कथा महाराजस्य तपस्विन्या राज्ञ्या वा?

संवः—कथं यूयं तस्य हेमचन्द्रस्य पक्षपातिन्यः?। यदीदं मे विज्ञातपूर्वं नाप्रकटिष्यत मया युद्धोदन्तः। [विषादं नाटयति।]

मदनः—[सशोकं चन्दलेखां वीजयति।]

वरोः—अतः परं कथयतु भवान्।

संवः—शोचे तावद्भवतीनां शोकमूलमात्मानमनुचिन्त्य।

मदनः—किं करोतु भवान्? यद्वयं दुर्विधिदग्धाः।

संवः—वन्दिनं सर्वदमनं निहतं हेमचन्द्रं च वीक्ष्य भीतभीताः प्राद्रवन्मागधयोधा विदिशो दिशः। हेमचन्द्रवधश्रवणकौतुकसंलब्धसंतोषबलो वैदेहनाथो निजकरकालिततच्छिराः सकुतुकसंघुष्यत्सैनिकवर्गो विजयमहोत्सवमभ्यनन्दत्।

मदनः—कच्चिच्छ्रुतिमुपगतं तस्य करिष्यमाणं कर्म।

संवः—अथ किम्? अत्रान्तःप्रविश्य बन्दीकरिष्यति प्रतापरुद्रमिति।

मदनः—[सभयं] कष्टम्! कष्टम्!! का गतिः?

चन्द्रः—[नेत्रे उन्मील्य] हा पण्डितमणे! हा त्रिलोकैकवीर! हा धैर्यनिधे! कथं त्वमपि हतः? कथमिदमपि भाव्यं नाम? यद्बालपोतेन वैनतेयो हत इति। मन्दवातेन

समुन्मूलितो मलयाचल इति, मेषशिशुना निहतो मृगेन्द्र इति। न विस्रम्भमर्हतीयं कथा हेमचन्द्रोऽप्यायोधने विजित इति। वञ्चनयापि नायमलं विजेतुम्। हा दुर्विदग्धविधे दर्शितं त्वयाऽतर्कितोपनमने कौशलम्। किमिदमबलायामपि दर्शनीयमेव! किं वा न सङ्कल्पितं मूढया "अक्लिष्टतनुर्विजयी प्रत्यागमिष्यतीति तमुन्मुखीभूय नन्तव्यमिति। मगधाधिराज्ये अभिषेचयितव्य इति। अथ" ...., इत्थमामनन्त्या दुर्भगयैव भवतो निधनमापादितम्। आर्य! शुद्धात्मन्? को वाऽन्यो बन्दिगृहात्समीकं प्राप्य कुर्वीत यावत्प्राणमित्थमायोधनम्। आर्य! सकलललनाहृदयचोर! इह मम पूर्वपुण्येन मयि विन्यस्तप्रेमभावो भवानद्य किल नूनं स्ववनितास्वहमहमिकादत्तकरावलम्बासु कलहबीजं वप्स्यसि! हा: सखि! सरोजिनि! सन्दीपय वह्निम्। महात्मानं तमनुगमिष्यामि। नाहमीशे पराभवपरिदूनहृदयं पितरं द्रष्टुं, अथवा तपस्विनीं मातरम्।

**सरो:**—[अपवार्य] किमत्र कार्यं मदनलतिके!

**मदनः**—[अपवार्य] अचिन्त्यमिदं विजयी वैदेहः सैन्यैः समं नगरीं प्रविष्टः किं वा करिष्यतीति। स किल कामुको दुःशीलश्च। तदत्र सख्या साकं पावकं प्रविशावः।

**चन्द्रः**—[सदैन्यं] अयि! कथं युवामप्यद्य ममान्तिमप्रार्थनानिर्वर्तने मन्थरीभूते।

मदनः–[भ्रूसंज्ञया। चोदयति सरोजिनीम् ।]

सरो:–[परिसरगतकाष्ठैरग्निमुद्दीपयति ।]

चन्द्र:–[दीप्तमग्निं प्रदक्षिणीकुर्वन्ती ।]

भगवन्! धनञ्जय!

यं भावयामि सततं मनसा कृशानो
प्रेमानुबन्ध इह मे निहितश्च यस्मिन् ।
भूयः कवीन्द्रतनयस्स तु हेमचन्द्रो
जन्मान्तरेऽपि पतिरस्तु न विप्रयोगः ॥१०१॥

सखि मदनलतिके! सरोजिनि! निष्फलमियमुपासिता भवतीभ्यां किंशुकेव । शोचामि नाहमात्मने न वा पित्रोः मानिन्यौ भवत्यौ मदेकाश्रये इतः परं कथं जीविष्यतः तस्मिन् प्रविष्टे दुष्टे । क्षन्तुमर्हथो ममापराधाननन्तान्राजदारिकादर्पेण कृतान् । अथवा प्राणा मम भवत्यो । [उभे रुदतः] आर्य पूर्वज! किं नोचितं मम तदेकजीविताया आत्मार्पणं हुतभाजन ।

संव:–क्षत्रनारीणां खल्विदमनादिव्रतम् ।

चन्द्र:—देव! हव्यवाह! प्रतिगृह्णीष्व मां विप्रवरानुज्ञातां तव तनयामिव । [इति ध्यायति]

संव:—[सतोषं] सिद्धं समीहितम् ।

[ नेपथ्ये दुन्दुभिध्वनिः । ]

**मदनः**—[सभयं] आयातीव विदेहाधिपः । [कम्पते]

**चन्द्रः**—हुतभोजन! स्वीकुरु मामनपराधाम्। [इति पतति]

**सरोः**—विरम! [चन्द्रलेखामवष्टम्भते ।]

**चन्द्रः**—[सदैन्यं] किमर्थं निषेधसि मां दुर्भगाम् ।

**सरोः**—श्रुतोऽयं दुन्दुभिस्वनो मागध इव ।

**मदनः**—[सविमर्शं] आं तथैव ।

**चन्द्रः**—कथमद्य मागधदुन्दुभेः संभवः?

[पुनर्नेपथ्ये ।]

जित्वा समुद्यतभयानकशस्त्रिसङ्घान्
काश्मीरकुन्तलविदेहमुखान्महीपान् ।
आदाय रत्ननिचयं गजराजपृष्ठे-
ष्वायाति वीर्यनिधिरेष हि हेमचन्द्रः ॥१०२॥

**संवः**—[सभयं] विजयी हेमचन्द्रः किल समायाति। [इति पलायितुमुद्युङ्क्ते । सरोजिनी तं गृह्णाति। ]

**सरोः**—तथ्यमिदम् । [सरोषं] एष खलु विप्रवटुर्मया पूर्वमेव संशयितः। अरे! विप्राधम! कस्त्वम्? तथ्यं वद। अन्यथा त्वामत्रैवाग्नौ पातयेयम् ।

**संवः**—[सभयं] चारोऽहं काश्मीरनाथस्य। नायमपराधो मम! तदाज्ञयाऽनुष्ठितः ।

**चन्द्रः**—[साश्चर्यं] कथं त्वं चारः?

शतबलिः—[प्रविश्य सविनयं] वर्धतां राजदारिका। विजयिनं विनिवर्तमानं कुमारहेमचन्द्रं संभावयितुं आयुष्मतीमभिगच्छति महाराजः।

सरोः—हस्तग्राहं गृहीतोऽयं काश्मीरचारो मुण्डितशिराः क्षतकर्णो निर्वास्यतामित्यादिशतु प्रियसखी।

संत्रः—देव्यो वो विज्ञापनम्। सापराधमपि शरणागतं रक्षन्तु भवत्यः। [इति पादयोः पतति।]

चन्द्रः—अयि सरोजिनि! मुञ्चैनम्। अरे पलायस्व।

संत्रः—रक्षितोऽस्मि [इति पलायते।]

[ ततः प्रविशति सपत्नीपरिवारः राजा। ]

राजाः—प्रिये! अद्यापि रक्षिता मगधश्रीः हेमचन्द्रेणैव। कथमिमं संभावयेम?

देवीः—दत्त्वैव प्राणभूतां वत्सां चन्द्रलेखाम्।

राजाः—उचितमिदम्। [चन्द्रलेखां परिसान्त्व्य] वत्से! वर्धसे विजयिभर्तृसमागमेन।

चन्द्रः—[सलज्जा तिष्ठति।]

[ ततः प्रविशति हेमचन्द्रः सर्वदमनश्च सपरिवारः। ]

सर्वदमनः—विजयेन वर्धते महाराजः।

चन्द्रः—[स्वगतं] दिष्ट्या नायमतिश्रान्त आर्यपुत्रः।

हेमः—महाराज! महनीयभवत्प्रतापानलाविष्टतेजसा मया श्रीमतां तत्रभवतां महतीयं मगधराज्यश्रीः संरक्षिता ।
[इति खङ्गमर्पयति ।]

राजाः—[सादरमालिङ्गति । ततः प्रविशति कलाधरः ।]

कलाधरः—कृच्छ्राण्यवाप्य निखिलानि च दुःसहानि
स्वर्भानुमुक्त इव शीतकरः कुमारः ।
सन्दीपयत्यखिलदिग्वलयं यशोभि-
रित्यत्र मे श्रुतवतः किमु लभ्यमन्यत् ॥१०३॥

हेमः— तात अभिवादये ।

कलाः—अभिमतेन युज्यस्व ।

राजाः—आर्य! कलाधर! क्षम्यतां मम तदातनो दुरतिक्रमः संभ्रमकृतः ।

कलाः—किमर्थमिदं क्षमापणं नाम ।

यथोग्ररसितान्मेघो भावि वर्षं व्यनक्ति नः ।
तथाऽस्माकं भवान क्लेशाद्भाविनीं भाग्यसम्पदम् ॥

राजाः—सदृशमेतद्वचनं भवादृशामेव मनीषिणाम् । तात हेमचन्द्र! ।

वल्ल्येन्द्रसुतया पूर्वं कुमार इव पार्श्वयोः ।
चिरं राजस्व मागध्या श्रिया च सुतया मम ॥१०५॥

वत्से! प्रणम! प्रथमतः श्वशुरं ते ।

चन्द्रः—[सलज्जा प्रणमति।]

कलाः—सिद्धफलाऽस्तु ते मानसी वृत्तिः।

राजा—निर्जितं निखिलवैरिकुलं तत्
प्रापिता प्रियपतिं मम कन्या।
शासितारमनघं च जना मे
किन्नु वस्त्वपरमस्ति विधेयम् ॥१०६॥

कलाः—अथ किम्। तथापीदमस्तु भरतवाक्यम्।

पृथ्वीं शास्तु नृपो बुधैः परिवृतस्तद्धर्मवाक्यानुगः
भाषां किं च चिरन्तनीं सुमनसः संमानयन्त्वन्वहम्।
पर्जन्यैः क्रमवर्षुकैः वसुमती सत्सस्यभूषान्विता
सर्वान्वर्धयतान्नितान्तमुदितो धर्मेण भूयाज्जनः॥

[इति निष्क्रान्तास्सर्वे।]

॥ सप्तमोऽङ्कः ॥

॥ समाप्तः ॥



# ॥ शुद्धाशुद्धपत्रिका ॥

| | | | |
|---|---|---|---|
| | IV | शताननमित्र: | शताननमित्रम् |
| 4 | 4 | दर्शनीय | सुशकदर्शन |
| | 9 | धर्ष | धृष्यः |
| 8 | 19 | वाश्चति | वाञ्छति |
| 10 | 3 | पृष्टत | पृष्ठत |
| 12 | 15 | चनछले | चनच्छले |
| 20 | 4 | साहसं | सहासं |
| 22 | 10 | त्वादा | त्वदा |
| 28 | 20 | षेधतींतां | षेधयन्तीं |
| 31 | 16 | ष्ट्रिमनास | ष्ट्रिमानश्च |
| 32 | 5 | जन्मजन्म | सर्वजन्म |
| 11 | 14 | पाठनो | पाटनो |
| | 16 | काश्चि | किश्चि |
| 34 | 4 | अज्ञप्ता | आज्ञप्ता |
| 35 | 3 | हेमचन्द्र पुत्र | हेमचन्द्रस्य पु |
| 36 | 8 | कैशलं | कौशलं |
| 38 | 21 | परिवर्तिने | परिवर्तने |
| 41 | 15 | त्तिष्टन्ती | त्तिष्ठन्ती |
| 43 | 10 | केश्ची | केषि |
| 45 | 17 | सल्लाप | संलाप |
| 46 | 13 | यश्च | यश्च |

| | | | |
|---|---|---|---|
| 49 | 7 | बधकं | बधकरं |
| 54 | 10 | िस्पष्ट | ल्पिष्ट |
| | | भृशपापं | किल पापं |
| | 12 | क्षीण | नाश |
| 59 | 4 | पृथना | पूतना |
| 60 | 9 | स्वागतं | स्वगतं |
| 62 | 4 | कृतज्ञो | कृतज्ञभावो |
| | 7 | ध्यक्षे | ध्यक्ष्ये |
| 70 | 11 | मानिन्यौ | मानिन्यौ |
| 72 | 10 | प्रविति | प्रविशति |
| | 17 | प्रविसति | प्रविशति |



# Select Opinions.

## **Prabuddha Bharata** of May 1938.

**Thyagaraja Charita**—Besides the life-history of the hero, the book contains also an exposition of the excellence of Bhakti-yoga, the striking characteristics of a saintly life, and, above all a soulful praise of the hero's hero—Sri Rama himself. We recommend this excellent piece of Sanskrit poetical composition to all the lovers of our classical language and believe that its perusal will not fail to inspire them with the great ideal of devotion which the author has so successfully depicted in his maiden venture.

## **Journal of the Music Academy**

Madras (1935—37)

His talent for dramatic presentation of situations in the story and his power of characterisation are undeniable. The realism of the scenes, the appositeness of the speeches, the distinct individuality of the characters, the profusion of the descriptive eloquence, the spaciousness of the narrative scheme, all these remind us of the grand epics of India.

## **The Vaitarani** of July 1938.

By a casual perusal of this booklet, the product of author's great pains the devotional ray flashes and keeps on firing even through the dim dark atheistic mind.